# संस्कृतनिपुणता
# Level-02

Janaseva Trust Premises, Magadi Main Road,
Channenahalli, Bengaluru- 562130
Ph- +91 8431668084 , info@vvss.res.in www.vvss.res.in

पौरैरनुगतो दूरं पित्रा दशरथेन च ॥1.1.28॥
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥1.1.29॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

पौरैः पित्रा दशरथेन च दूरम् अनुगतः धर्मात्मा (रामः) शृङ्गवेरपुरे निषदाधिपति प्रियं गुहम् आसाद्य गङ्गाकूले सूतं व्यसर्जयत्।

- अन्वयार्थः

नगरवासिभिः जनकेन दशरथनाम्ना नृपेण दूरं यावत् अनुसृतः पुण्यात्मा (रामः) शृङ्गवेरपुरनामके नगरे निषादराजम् इष्टं गुहनामकं प्राप्य जाह्नवीतटे सारथि परावर्तयत्।

पौरैरनुगतो दूरं पित्रा दशरथेन च ॥1.1.28॥
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥1.1.29॥

- पदपरिचयः
  - पौरैः – पौर – पुं, तृतीया, बहुवचनम्।
  - अनुगतः – अनुगत – पुं, प्रथमा, एकवचनम्।
  - पित्रा – पितृ – पुं, तृतीया, एकवचनम्।
  - दशरथेन – दशरथ - पुं, तृतीया, एकवचनम्।
  - श्रृङ्गवेरपुरे, गङ्गाकूले – श्रृङ्गवेरपुर, गङ्गाकूल – नपुं, सप्तमी, एकवचनम्।
  - दूरम् – दूर – नपुं, द्वितीया, एकवचनम्।
  - सूतं, गुहं, प्रियम् – सूत, गुह, प्रिय – पुं, द्वितीया, एकवचनम्।
  - निषदाधिपतिम् – निषदाधिपति – पुं, द्वितीया, एकवचनम्।
  - आसाद्य – ल्यबन्तम् अव्ययम्।
  - धर्मात्मा – धर्मात्मन् – पुं, प्रथमा, एकवचनम्।
  - व्यसर्जयत् – वि० सृज – विसर्गे+णिच् – कर्तरि, लङ्, प्रपु, एकवचनम्।

गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥1.1.30॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  गुहेन लक्ष्मणेन सीतया सहितः रामः वनेन वनं गत्वा बहूदकाः नदीः तीर्त्वा ।

- अन्वयार्थः

  गुहनाम्ना निषादेन लक्ष्मणनामकेन अनुजेन जानक्या सह राघवः अरण्येन अरण्यं प्राप्य गभीराः सरितः उत्तीर्य।

# गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
# ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥1.1.30॥

- पदपरिचयः
  - गुहेन, लक्ष्मणेन – गुह, लक्ष्मण – पुं, तृतीया, एकवचनम्।
  - सीतया – सीता – स्त्री, तृतीया, एकवचनम्।
  - सहितः – सहित – पुं, प्रथमा, एकवचनम्।
  - वनेन – वन – नपुं, तृतीया, एकवचनम्।
  - वनम् – वन – नपुं, द्वितीया, एकवचनम्।
  - तीर्त्वा, गत्वा – क्त्वान्तम् अव्ययम्।
  - ते – तद् – (सर्वनाम) पुं, प्रथमा, बहुवचनम्।
  - बहूदकाः – बहूदका – स्त्री, प्रथमा, बहुवचनम्।
  - नदीः – नदी – स्त्री, द्वितीया, बहुवचनम्।

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।
रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥1.1.31॥
देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

भरद्वाजस्य शासनात् चित्रकूटमनुप्राप्य वने रम्यम् आवसथं कृत्वा देवगन्धर्वसङ्काशाः ते त्रयः रममाणाः सुखं न्यवसन्।

- अन्वयार्थः

भरद्वाज-नाम्नः ऋषेः आज्ञया चित्रकूटनामानं पर्वतं संगम्य अरण्ये मनोहरम् आवासस्थानं निर्माय देवगन्धर्वसदृशाः सीतारामलक्ष्मणाः विहरन्तः सुखपूर्वकं निवासमकुर्वन्।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।
रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥1.1.31॥
देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् ।

- पदपरिचयः
  - चित्रकूटं, रम्यम्, आवसथम् – चित्रकूट, रम्य, आवसथ – पुं, द्वितीया, एकवचनम्।
  - अनुप्राप्य – ल्यबन्तम् अव्ययम्।
  - कृत्वा – क्त्वान्तम् अव्ययम्।
  - भरद्वाजस्य – पुं, षष्ठी, एकवचनम्।
  - शासनात् – नपुं, पञ्चमी, एकवचनम्।
  - रममाणाः, देवगन्धर्वसदृशाः – रममाण, देवगन्धर्वसदृश – पुं, प्रथमा, बहुवचनम्।
  - वने – वन – नपुं, सप्तमी, एकवचनम्।
  - त्रयः - त्रि – पुं, प्रथमा, बहुवचनम्।
  - तत्र – तद्धितान्तम् अव्ययम्।
  - ते – तद् – (सर्वनाम) पुं, प्रथमा, बहुवचनम्।
  - सुखम् – सुख – नपुं, द्वितीया, एकवचनम्।
  - न्यवसन् – नि+वस – निवासे, कर्तरि, लङ्, प्रपु, बहुवचनम्।

चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ॥1.1.32॥
राजा दशरथस्स्वर्गं जगाम विलपन्सुतम् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

रामे चित्रकूटं गते पुत्रशोकातुरः राजा दशरथः सुतं विलपन् स्वर्गं जगाम ।

- अन्वयार्थः

राघवे चित्रकूटं प्राप्ते पुत्रवियोगदुःखपीडितः भूपः अयोध्याधिपतिः पुत्रं रुदत् स्वर्गलोकं गतवान् ।

# चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ॥1.1.32॥
# राजा दशरथस्स्वर्गं जगाम विलपन्सुतम् ।

- पदपरिचयः
  - चित्रकूटं, स्वर्गं, सुतम् - चित्रकूट, स्वर्ग, सुत – पुं, द्वितीया, एकवचनम्।
  - गते, रामे – गत, राम – पुं, सप्तमी, एकवचनम्।
  - पुत्रशोकातुरः, दशरथः – पुत्रशोकातुर, दशरथ – पुं, प्रथमा, एकवचनम्।
  - तथा – अव्ययम्।
  - राजा – राजन् – पुं, प्रथमा, एकवचनम्।
  - विलपन् – विलपत् – पुं, प्रथमा, एकवचनम्।
  - जगाम – गमॢ – गतौ, कर्तरि, लिट्, प्रपु, एकवचनम्।

## मृते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ 1.1.33 ।
## नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।
## स जगाम वनं वीरो रामपादप्रसादकः । 1.1.34 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

तस्मिन् दशरथे गते तु वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः महाबलः भरतः राज्यं न ऐच्छत् (किन्तु) रामपादप्रसारकः सः वीरः वनं जगाम।

- अन्वयार्थः

दशरथे (स्वर्गं) प्राप्ते वसिष्ठप्रधानैः विप्रैः राजसिहासनाय आदिश्यमानः शक्तिशाली कैकेयीपुत्रः राजसिहासनं न अवाञ्छत् अपि तु रामचरणानुरञ्जकः भरतः पराक्रमी काननं गतवान्।

1. सेवकः धनिकं सेवते। पृच्छति।
2. महेशः गुरुं प्रार्थयते। वदति।
3. छात्रः पुस्तकम् अधीते। पतति।

1. सेवकः धनिकं सेवमानः पृच्छति।
2. महेशः गुरुं प्रार्थयमानः वदति।
3. छात्रः पुस्तकम् अधीयानः पतति।

1. धनिकं **सेवमानः सेवकः** पृच्छति।
2. गुरुं **प्रार्थयमानः महेशः** वदति।
3. पुस्तकम् **अधीयानः छात्रः** पतति।

1. सेवकेन धनिकः सेव्यते। पृच्छति।
2. महेशेन गुरुः प्रार्थ्यते। वदति।
3. छात्रेण पुस्तकम् अधीयते। पतति।

1. सेवकेन धनिकः सेव्यमानः पृच्छति।
2. महेशेन गुरुः प्रार्थ्यमानः वदति।
3. छात्रेण पुस्तकम् अधीयमानं पतति।

1. सेवकेन सेव्यमानः धनिकः पृच्छति।
2. महेशेन प्रार्थ्यमानः गुरुः वदति।
3. छात्रेण अधीयमानं पुस्तकं पतति।

1. भिक्षुकः धनं याचते। पश्यति।
2. छात्रः पुस्तकम् अधीते। ददाति।
3. आपणिकः वस्तूनि विक्रीणीते। स्वीकरोति।

1. भिक्षुकः धनं याचमानः पश्यति।
2. छात्रः पुस्तकम् अधीयानः ददाति।
3. आपणिकः वस्तूनि विक्रीणानः स्वीकरोति।

1. धनं याचमानः भिक्षुकः पश्यति।
2. पुस्तकम् अधीयानः छात्रः ददाति।
3. वस्तूनि विक्रीणानः आपणिकः स्वीकरोति।

1. भिक्षुकेण धनं याच्यते। महेशः ददाति।
2. छात्रेण पुस्तकम् अधीयते। गुरुः पश्यति।
3. आपणिकेन वस्तूनि विक्रीयन्ते। क्रेता स्वीकरोति।

1. भिक्षुकेण धनं याच्यमानं, महेशः ददाति।
2. छात्रेण पुस्तकम् अधीयमानं, गुरुः पश्यति।
3. आपणिकेन वस्तूनि विक्रीयमाणानि, क्रेता स्वीकरोति।

1. महेशः भिक्षुकेण याच्यमानं धनं ददाति।
2. गुरुः छात्रेण अधीयमानं पुस्तकं पश्यति।
3. क्रेता आपणिकेन विक्रीयमाणानि वस्तूनि स्वीकरोति।

Veda Vijnana Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

मृते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ 1.1.33 ॥
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।
स जगाम वनं वीरो रामपादप्रसादकः ॥ 1.1.34 ॥

- पदपरिचयः
  - गते – गत – पुं, सप्तमी, एकवचनम् ।
  - तु, न - अव्ययम् ।
  - तस्मिन् – तद् – (सर्वनाम) पुं, सप्तमी, एकवचनम् ।
  - भरतः, नियुज्यमानः, महाबलः, वीरः, रामपादप्रसारकः – भरत, नियुज्यमान, महाबल, वीर, रामपादप्रसारक – पुं, प्रथमा, एकवचनम् ।
  - वसिष्ठप्रमुखैः, द्विजैः - वसिष्ठप्रमुख, द्विज – पुं, तृतीया, एकवचनम् ।
  - राज्याय – नपुं, चतुर्थी, एकवच्नम् ।
  - राज्यं, वनम् – राज्य, वन – नपुं, द्वितीया, एकवचनम् ।
  - सः – तद् (सर्वनाम) पुं, प्रथमा, एकवचनम् ।
  - जगाम – गमलृ – गतौ, कर्तरि, लिट्, प्रपु, एकवचन्म् ।
  - ऐच्छत् – इषु – इच्छायाम्, कर्तरि, लङ्, प्रपु, एकवचनम् ।

गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।
अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥1.1.35॥
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

आर्यभावपुरस्कृतः सः (भरतः) गत्वा महात्मानं सत्यपराक्रमं भ्रातरं रामम् अयाचत्। त्वमेव राजा धर्मज्ञः इति वचः रामम् अब्रवीत्।

- अन्वयार्थः

उत्तमगुणसम्पन्नः भरतः प्राप्य महान्तम् अमोघविक्रमम् अग्रजं राघवं याचितवान् त्वमेव धर्मतत्त्ववेत्ता नृपः एवं वचनं राघवम् अकथयत्।

गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।
अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥1.1.35॥
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।

- पदपरिचयः
    - गत्वा – क्त्वान्तम् अव्ययम्।
    - तु, एव, इति – अव्ययम्।
    - सः – तद् – (सर्वनाम) पुं, प्रथमा, एकवचनम्।
    - महात्मानम् – महात्मन् – पुं, द्वितीया, एकवचनम्।
    - रामम् – राम – पुं, द्वितीया, एकवचनम्।
    - भ्रातरम् – भ्रातृ – पुं, द्वितीया, एकवचनम्।
    - आर्यभावपुरस्कृतः, धर्मज्ञः – आर्यभावपुरस्कृत, धर्मज्ञ – पुं, प्रथमा, एकवचनम्।
    - राजा – राजन् – पुं, प्रथमा, एकवचनम्।
    - त्वम् – युष्मद् – (सर्वलिङ्गसमानः), (सर्वनाम) प्रथमा, एकवचनम्।
    - वचः – वचस् – नपुं, द्वितीया, एकवचनम्।
    - अयाचत् – डुयाचृ – याञ्चायाम्, कर्तरि, लङ्, प्रपु, एकवचनम्।
    - अब्रवीत् – ब्रूञ् – व्यक्तायां वाचि, कर्तरि, लङ्, प्रपु, एकवचनम्।